# स्वरसारभूतवर्णक्रम शिक्षा

स्वरसारभूतवर्णक्रम शिक्षा
शुभमस्तु
ध्वनिस्थानं च करणं प्रयत्नः कालतः स्मृतः
देवता जातिरङ्गं च वर्णा ज्ञेया च लक्षणैः
ध्वनिलक्षणम्
अचस्तृतीया वर्गान्ता यरला नादयाश्च वः
द्वितीयवर्णाः शषसा श्वासध्वनिसमुद्भवाः
चतुर्थाश्च हकारश्च हकारध्वनिसंभवाः
वर्गाः प्रथमवर्णाश्च अर्कध्वनिसमुद्भवाः
नादश्वासहकारार्का कण्ठेऽल्पविवृतेऽधिके
स्थानम्
अव्यञ्जनस्वराणां च आदौ कण्ठ इतीरितः
अवर्णेनात्युपसर्गहृतमोष्ठहनुनातिव्यस्तम्
ओष्ठोपसर्गहार उवर्णे
हनूमूले जिह्वामूलेन कवर्गे स्पर्शयति
--मुखनासिक्या वा
प्रयत्नलक्षणम्

स्वराणामूष्मणांश्चैव प्रयत्नो विवृतः स्मृतः
संवृतत्वमकारस्य विशेषोऽयं विधीयते
स्पर्शानां स्पृष्टतान्तस्थात्स्वीषत्स्पृष्टत्वमीरितम्
अतिस्पृष्टो द्वितीयेषु चतुर्थेषु च तत्समः

काललक्षणम्

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते
त्रिमात्रस्त्रिप्लुतो ज्ञेयश्चातुर्मात्रस्तु रङ्गिकाः
व्यञ्जनस्वरभक्तीनां कालः स्यादर्धमात्रता
अस्वरव्यञ्जन नित्यमणुमात्रं प्रयुज्यते

देवता

उच्चस्य देवता भूमिर्नीचस्याग्निस्तु देवता
स्वारस्तु देवता चन्द्रो धृतस्यार्कस्तु देवता
उदात्तो ब्रह्मजातिः स्यान्नीचो राजन्य उच्यते
स्वरितो वैश्यजातिः स्यात्प्रचयश्शूद्र इतीरितः
कण्ठाकाशमहत्वं च नीचजन्मनि हेतवः
कारणि स्वरितोत्पत्तौ समाहारो धृतिर्भवेत्
उदात्तश्श्रुतिरेवेति प्रचयात्स्वर इत्यर्थः

यस्य प्रसिद्धत
उदात्तः सात्त्विकः प्रोक्तः स्वरितो राजसस्मृतः
निहतःप्रचयावेतौ तामसौ तु विदुर्बुधाः
अदादेत्प्रथमयषा दश वाय्वधिदेवताः
इदीदो द्वितीयरसा दश वह्न्यधिदेवताः
उदूदोत्तृतीय लहा दश भूम्यधिदेवताः
अृ अृदौच्चतुर्थवळाद् दश चन्द्राधिदेवताः
लृकारः पञ्चमाः शक्षावष्टौ सूर्याधिदेवताः
जाति लक्षणम्
वर्गाणां प्रथमा वर्णाः स्वरास्तु ब्रह्मजातयः
द्वितीयाश्च तृतीयाश्च चतुर्थाः क्षत्रजातयः
अन्तस्थाश्चोत्तमाश्चैव वैश्यः खलु समीरिताः
अनुस्वारो विसर्गश्च ह्यूष्माणः शूद्रजातयः
अङ्गलक्षणम्
स्याद्व्यञ्जनं परस्याङ्गं पूर्वस्याचोऽवसानगम्
अृकारे परभूते च रेफोऽनुस्वार एव च
संयोगादि परायुक्तं स्वरभक्तिर्विसर्गगः

पराङ्गं प्रचयाद्भक्तिः प्रचये ऋपरे च रः
अन्तस्थोऽर्धे सवर्णं च अनुस्वारो वा संकरे
पदाङ्गो गमपरश्चोष्माप्रकृतिस्पर्शो यमास्त्विति
वाय्वग्निभूमीन्दुरर्काः । वर्णाधिदेवताः
अ इ उ ण्
ऋ ऌ क्
ए ओ ङ्
ऐ औ च्
भूरग्निश्चन्द्रमाः सूर्या स्वराधिदेवताः

हनू तालू मूर्धनि दन्तमूला ओष्ठस्थानानि
जिह्वा श ष स वर्णानां चतुर्णां वर्गाणां यरल वर्णानां च करणम्
अथ ओष्ठपवर्ग वकारं च ओष्ठकरणं विज्ञेयम्
ऌतुलसानां दन्तमूलस्थानम् इचुयशा तालव्य ऋटुरषा मूर्धन्यस्थानानि जातन्यानि
अकुहविसर्जनीया कण्ठः
कण्ठनासिक्यमनुस्वारस्य
इति स्थानानि

# आदौ स्वराणां लिखितस्वरसारभूतवर्णक्रमपाठः

नादध्वनिजनित कण्ठविवृतोष्ठस्थान कण्ठाधोभागविवृतोष्ठाधः करण संवृतप्रयत्नैकमात्राकाल वायुदेवता ब्राह्मणजातिसहित अकारः
नादध्वनिजनित तालुस्थान जिह्वामध्यकरण विवृत प्रयत्नैकमात्राकाल वह्निदेवता ब्राह्मणजाति सहित इकारः
नादध्वनिजनितोत्तरोष्ठस्थानाधरोष्ठः करणं विवृतं प्रयत्नैकमात्राकाल भूमिदेवता ब्राह्मणजातिसहित उकारः
नादध्वनिजनित बर्स्वस्थान जिह्वाग्रकरण विवृत प्रयत्नैकमात्राकाल चन्द्रदेवता ब्राह्मणजाति सहित ऋकारः
नादध्वनि जनित तालुस्थान जिह्वामध्यकरण विवृत प्रयत्न द्विमात्राकाल वायुदेवता ब्राह्मणजातिसहित एकारः
नादध्वनिजनित हनूतालुस्थान जिह्वामध्यकरण विवृत प्रयत्न द्विमात्राकाल अग्निदेवता ब्राह्मणजाति सहित ऐकारः
नादध्वनिजनित हनू उत्तरोष्ठस्थान अधरोष्ठः करण विवृतप्रयत्न द्विमात्राकाल भूमिदेवता ब्राह्मणजाति सहित ओकारः
नादध्वनिजनित हनू उत्तरोष्ठस्थान अधरोष्ठकरण विवृतप्रयत्न द्विमात्राकाल चन्द्रदेवता ब्राह्मणजाति सहित औकारः
इत्युच्यन्ते
अर्कध्वनिजनित हनूमूलस्थान जिह्वामूलकरण श्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता ब्राह्मणजाति सहित ककारः
श्वासध्वनिजनित हनूमूलस्थान जिह्वामूलकरणातिस्पृष्टप्रयत्नार्धमात्राकाल वह्निदेवता क्षत्रियजाति पूर्वांगभूत खकारः
नादध्वनिजनित हनूमूलस्थान जिह्वामूलकरण स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता क्षत्रियजाति पराङ्गभूत गकारः
हकारध्वनिजनित हनूमूलस्थान जिह्वामूलकरण अतिस्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता क्षत्रियजाति पराङ्गभूत घकारः
नादध्वनिजनित हनूमूलस्थान जिह्वामूलकरण स्पृष्टप्रयत्नार्धमात्राकालार्कदेवता वैश्यजाति पूर्वाङ्गभूत ङकारः
अर्कध्वनिजनित तालुमूलस्थान जिह्वामध्यकरण स्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता ब्राह्मणजाति पराङ्गभूत चकारः
श्वासध्वनिजनित तालुमूलस्थान जिह्वामध्यकरणातिस्पृष्टप्रयत्नार्धमात्राकाल वह्निदेवता क्षत्रियजाति पूर्वाङ्गभूत छकारः
नादध्वनिजनित तालुमूलस्थान जिह्वामध्यकरण स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता क्षत्रियजाति पूर्वाङ्गभूत जकारः
हकारध्वनिजनित तालुमूलस्थान जिह्वामध्यकरणातिस्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता क्षत्रियजाति पराङ्गभूत झकारः
नादध्वनि तालुमूलस्थान जिह्वामध्यकरण स्पृष्टप्रयत्नार्धमात्राकाल सूर्यदेवता वैश्यजाति पूर्वाङ्गभूत ञकारः
अर्कध्वनिजनित मूर्ध्निस्थान शिरः प्रतिवेष्टितजिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता ब्राह्मणजाति पराङ्गभूत टकारः
श्वासध्वनिजनित मूर्ध्निस्थान जिह्वाग्रकरणातिस्पृष्टप्रयत्नार्धमात्राकाल अग्निदेवता क्षत्रियजाति पराङ्गभूत ठकारः
नादध्वनिजनित शिरस्थान जिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता क्षत्रियजाति पूर्वाङ्गभूत डकारः
हकारध्वनिजनित मूर्ध्निस्थान जिह्वाग्रकरणातिस्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता क्षत्रियजाति पराङ्गभूत ढकारः

नादध्वनिजनित मूर्ध्निस्थान जिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकालार्कदेवता वैश्यजाति पूर्वाङ्गभूत णकारः
अर्कध्वनिजनितोत्तरदन्तमूलेष्वधोभागस्थान जिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता ब्राह्मणजाति पराङ्गभूत तकारः
श्वासध्वनिजनितोत्तरदन्तमूलाहोभागस्थान जिह्वाग्रकरणातिस्पृष्टप्रयत्नार्धमात्राकाल वह्निदेवता क्षत्रियजाति पूर्वाङ्गभूत थकारः
नादध्वनिजनित दन्तमूलस्थान जिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता क्षत्रियजाति पराङ्गभूत दकारः
हकारध्वनिजनित दन्तमूलस्थान जिह्वाग्रकरणातिस्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता क्षात्रियजाति पराङ्गभूत धकारः
नादध्वनिजनित दन्तमूलस्थान जिह्वाग्रकरण स्पृष्टप्रयत्नार्धमात्राकालार्कदेवता वैश्यजाति पूर्वाङ्गभूत नकारः
अर्कध्वनिजनित उत्तरोष्ठस्थानाधरोष्टः करण स्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता ब्राह्मणजाति पराङ्गभूत पकारः
श्वासध्वनिजनितोत्तरोष्ठस्थानाधरोष्ठः करणातिस्पृष्टप्रयत्नार्धमात्राकाल वह्निदेवता क्षत्रियजाति पूर्वांगभूत फकारः
नादध्वनिजनित उत्तरोष्ठस्थानाधरोष्ठः करण स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता क्षत्रियजाति पराङ्गभूत बकारः
हकारध्वनिजनितोत्तरोष्ठस्थानाधरोष्ठः करणातिस्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता क्षत्रियजाति पूर्वाङ्गभूत भकारः
नादध्वनिजनित उत्तरोष्ठस्थानाधरोष्ठः करणे स्पृष्टप्रयत्नार्धमात्राकाल सूर्यदेवता वैश्यजाति पूर्वाङ्गभूत मकारः
अथान्तस्थानाम्
नादध्वनिजनित तालुस्थान जिह्वामध्यातः करण ईषत्स्पृष्टप्रयत्नार्धमात्राकाल वायुदेवता वैश्यजाति पराङ्गभूत यकारः
नादध्वनिजनित दन्तमूलाभ्यन्तरोपरिभागस्थान जिह्वाग्रमध्यकरणेषत्स्पृष्टप्रयत्नार्धमात्राकाल वह्निदेवता वैश्यजाति पराङ्गभूत रेफः
नादध्वनिजनित दन्तमूलस्थान जिह्वाग्रमध्यकरणेषत्स्पृष्टप्रयत्नार्धमात्राकाल भूमिदेवता वैश्यजाति पूर्वाङ्गभूत लकारः
नादध्वनिजनित उत्तरदन्ताग्रस्थान अधरोष्ठःकरणेषत्स्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता वैश्यजाति पूर्वाङ्गभूत वकारः
अथोष्मणाम्
श्वासध्वनिजनित तालुमूलस्थान जिह्वामध्यकरण विवृतप्रयत्नार्धमात्राकाल सूर्यदेवता शूद्रजाति पराङ्गभूत शकारः
श्वासध्वनिजनित मूर्ध्निस्थान जिह्वाग्रकरण विवृतप्रयत्नार्धमात्राकाल वायुदेवता शूद्रशाति पूर्वाङ्गभूत षकारः
श्वासध्वनिजनित दन्तमूलाधोभागस्थान जिह्वाग्रकरण विवृतप्रयत्नार्धमात्राकाल वह्निदेवता शूद्रजाति पूर्वाङ्गभूत सकारः
हकारध्वनिजनित कण्ठस्थान कण्ठाधोभागकरण विवृतप्रयत्नार्धमात्राकाल भूमिदेवता शूद्रजाति पूर्वाङ्गभूत हकारः
अर्कध्वनिजनित हनूमूलस्थान जिह्वामूलकरण विवृतप्रयत्नार्धमात्राकाल वायुदेवता शूद्रजाति पराङ्गभूत जिह्वामूलीयः
अर्कध्वनिजनितोत्तरोष्ठस्थानाधरोष्ठःकरण विवृतप्रयत्नार्धमात्राकाल वायुदेवता शूद्रजाति पूर्वाङ्गभूत उपध्मानीयः
नादध्वनिजनितोत्तरदन्तमूलस्थान जिह्वाग्रमध्यकरणेषत्स्पृष्टप्रयत्नार्धमात्राकाल चन्द्रदेवता वैश्यजाति पूर्वाङ्गभूत ळकारः

नादध्वनिजनित बर्स्वस्थान जिह्वाग्रहनूकरण विवृतप्रयत्नैकमात्राकाल सूर्यदेवता ब्राह्मणजाति सहित ऌकारः
श्वासध्वनिजनित हनूमूलस्थान जिह्वामूलकरणातिस्पृष्टप्रयत्नाणुमात्राकाल वह्निदेवता क्षत्रियजाति पूर्वाङ्गभूत ॅ‌ःकारः
श्वासध्वनिजनित मूर्ध्निस्थान जिह्वाग्रकरण विवृतप्रयत्नार्धमात्राकाल सूर्यदेवता शूद्रजाति पूर्वाङ्गभूत हंसपदास्वरभक्ति षकारः
नादध्वनिजनित बर्स्वस्थान जिह्वाग्रकरण संवृतप्रयत्नार्धमात्राकाल चन्द्रदेवता ब्राह्मणजाति पूर्वाङ्गभूत करेणुस्वरभक्ति हकारः
नादध्वनिजनितोत्तरस्थानजिह्वाग्रमध्यकरण विवृतप्रयत्नार्धमात्राकाल वह्निदेवता वैश्यजाति पूर्वाङ्गभूत हरिणीस्वरभक्ति शकारः
अर्कध्वनिजनित हनूमूलस्थान जिह्वाकरण स्पृष्टप्रयत्न द्विमात्रकाल वायुदेवता शूद्रजाति पूर्वाङ्गानुस्वारः
अथ उदात्तादिस्वरस्वरूपमाह
भूमिदेवता ब्राह्मणजाति सत्वगुणसहित तर्जन्यं गाळी मध्यरेखां न्यासयोग्याध्येत्रंगदार्ध्यैरैघदैर्घ्यकराठाकाशमुखस्थानोद्भवोदात्तः
अनुदात्तस्वरूपमाह
अग्निदेवता क्षत्रियजाति तमोगुणसहित कनिष्ठिकांगुल्याद्यरेखां न्यासयोग्याध्येत्रङ्गमार्दवदेहह्रस्वककराठविवरकृशत्वकरहृदिस्थानोद्भवोनुदात्तः
स्वरितस्वरूपमाह
इन्द्रदेवता वैश्यजाति रजोगुणसहितानामिकाङ्गुल्यान्त्यरेखां न्यासयोग्याध्येत्रानन्त्यकरशीर्षस्थानोद्भवस्वरितः
प्रचयमाह
अर्कदेवता शूद्रजाति तमोगुणसहित मध्याङ्गुळिमध्यरेखां न्यासयोग्याध्येत्रङ्गदार्ध्यरिहदैर्घ्यकराठकाशमहत्वकरहृदिस्थानोद्भवप्रचयः

## इति स्वरसारभूतवर्णक्रमशिक्षा समाप्ता

Reference:
(Catalogued as) Varṇa-Krama-Lakṣaṇam, Mysore Governmental Oriental Manuscript Library, Telugu script on palm leaves, 10 folios, (P 4772/22).